नपरतपरे

नत्वा विनायकं देवं सर्वसंपत्करं परम्
शौरिसूनुः प्रवक्ष्यामि नवं नतपरं पदम् ४१
लक्षणं क्रियते चादि परं नाम नवं मया
दुर्ज्ञानं दुष्पठं यत्तु सापेक्षं चाक्रमं तथा ४२
तत्परित्यज्य व्याख्यानं चकारापि च पौष्कलम्
नारम्भणीयमेतच्च स्वत एव व्यवस्थितेः ४३
प्रसिद्धाध्ययनात्तत्र केचित् संदिह्यते भृशम्
कुतोऽवसीयते कैश्चिन्निपुणैश्च महात्मभिः ४४
निश्चितं स्वानुरूपेण लक्षणेनावसीयते
चादौ विकारिणौ नेतः पदान्तो विषयोऽस्य सः ४५
अभिधेयौ च तावेव तज्ज्ञानं च प्रयोजनम्
न छजेषु तवर्गीये थकारेण विवर्जिते ४६
चतुष्टये मकारे च लकारे च परे स्थिते
विकारिणः पदान्तो यस्तकारे नपरश्च यः ४७
दृश्यते येषु तौ ज्ञातुं प्रवक्ष्यामि पदान्यहम्
तकारान्तं पदं पूर्वमकारादिक्रमेण तु
तकारान्तं ततोऽनेन क्रमेणैव च गृह्यते ४८
इति परिभाषा

महान्नभोविन्नासन् नर्धानान्न त्वा महान्परेः

नि यामं चित्र देवान् देवयास्मान्निधयेव च ४९
शीर्वान्ममत्वर्णवान् जगम्याश्च हरिवान्दधे
मघवन्मातथा अग्मन्देवाहन्नवतीर्नव ५०
महान्मित्रो न रेभन् मितेव सद्म व्रजन्नप
इन्वन्मदाय पश्यं जन्मानि सू संयमं न च ५१
वि यमन्न समुद्यँल्लोकानिमांल्लोकमरोचयः
न्यस्मिन् दध्रे तु क्रंदन्देवा अजीजनयन्मधु ५२
ऊर्मिन्न सिन्धुः शत्रून्मदे सोमस्य च वै बुधाः
म दस्यून्तनूभिरग्मन्मंदी परि ज्मन्मही तथा ५३
विभ्राज ज्योति देवान्मत्सि गच्छं जार एव हि
अप सेधन् दुरिता सर्दधन्वान् मत्सरिंतमः ५४
मधुमान्द्रप्सः सामन्तपता धर्मन्दिवस्तथा
मघवन्न नकारान्तं पदमेव प्रकीर्तितम् ५५
नपरं समाप्तम्
अथो नपरसूत्राणि गलसंख्या समीरिता
एकस्य चैकरीत्या च बहुसंख्यास्तथेरिताः ५६
एकस्य द्वितयत्वेन एकसंख्या तथेरिता
आहत्योदाहृतिः प्रोक्ता वनसंख्यासमेन तु ५७
इति नपरं समाप्तम्